तद्विषयः पृथक् शास्त्रारम्भ उपपद्यते। प्रतिपत्तिविधिपरत्वे ह्यथातो धर्मजिज्ञासेत्येवाऽऽरब्धत्वान्न पृथक् शास्त्रमारभ्येत। आरभ्यमाणं चैवमारभ्येत। अथातः परिशिष्टधर्मजिज्ञासेति 'अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा' [पू० मी० ४। १। १।] इतिवत्। ब्रह्मात्मैक्यावगतिस्त्वप्रतिज्ञातेति तदर्थो युक्तः शास्त्रारम्भः'अथातो ब्रह्मजिज्ञासा' इति। तस्मादहं ब्रह्मास्मीत्येतदवसाना एव सर्वे विधयः सर्वाणि चेतराणि प्रमाणानि। न ह्यहेयानुपादेयाद्वैतात्मावगतौ निर्विषयाण्यप्रमातृकाणि च प्रमाणानि भवितुमर्हन्तीति। अपि चाऽऽहुः।

"गौणमिथ्यात्मनोऽसत्त्वे पुत्रदेहादिबाधनात्।
सद्ब्रह्मात्माऽहमित्येवं बोधे कार्यं कथं भवेत्॥

प्रतिपत्तीति। नन्वाद्ये काण्डे बाह्यक्रियाविधिरधिगतो मानसज्ञानविधिविचाराय काण्डान्तरमारभ्यते नेत्याह। **आरभ्यमाणं चेति**। देहादिसाध्यकर्मविचारानन्तर्यमथेत्युक्तम्। तस्यैव चित्तशुद्धिद्वारा ज्ञानविधिविचारोपयोगिताऽतःशब्दार्थः। तत्र चातुर्थिकमुदाहरणमाह। **अथात इति**। तृतीये श्रुत्यादिभिः शेषशेषित्वे सिद्धे सत्यनन्तरं शेषिणैव शेषस्य प्रयुक्तिसंभवात्को नाम क्रतवे प्रैकुरुते को वा पुरुषार्थायेति क्रत्वर्थपुरुषार्थयोर्जिज्ञासा ज्ञातुमिच्छा प्रवृत्तेति चतुर्थादौ प्रतिज्ञासूत्रवदिदमपि ब्रूयात्। न चैवं ब्रवीति। तस्मान्नोक्तविभागधीरित्यर्थः। त्वन्मतेऽपि कथं पृथगारम्भः शास्त्रस्येत्याशङ्क्य मेयफलभेदादित्याह। **ब्रह्मेति**। स्वातन्त्र्येण ब्रह्मात्मैक्यनिष्ठत्वे वेदान्तानां तदेव तात्त्विकमिति कथं द्वैतालम्बनस्य विधिकाण्डस्याध्यक्षादेश्च मानतेत्याशङ्क्योपसंहरन्परिहरति। **तस्मादिति**। अद्वैतधियो भेदाधिष्ठानमानविरोधित्वं तच्छब्दार्थः। इति ना ज्ञानं परामृष्टम्। तस्मादित्युक्तं हेतुं व्यनक्ति। **नहीति**। तत्त्वसाक्षात्कारे तदज्ञानध्वस्तौ तदुत्थमात्रादिसर्वभेदध्वस्तेरविद्यावस्थायामेवाशेषो व्यवहार इत्यर्थः। कार्यास्पृष्टे सिद्धे ब्रह्मण्यद्वये सिद्धा वेदान्तमानतेत्युपसंहर्तुमितिशब्दः। न केवलमस्माभिरयमर्थोऽभ्युपगतः किं त्वन्यैरपि ब्रह्मविद्भिरित्याह। **अपि चेति**। सत्पारमार्थिकमबाधितं ब्रह्माहमित्येवं बोधे जाते पुत्रदेहादेः सत्ताबाधनान्मायामात्रत्वावगमादयमहमेवेति पुत्रादावहमभिमानस्य गौणात्मनो मनुष्योऽहमिति देहादावहमभिमानस्य च मिथ्यात्मनोऽसत्त्वे कार्यं कथं भवेत्तन्निमित्ताभावाद्विधिविधेयादिव्यवहारो न कथंचिदित्यर्थः। यद्यात्मा सद्ब्रह्मैव कस्तर्हि प्रमाता यद्ययमेव कथं तर्हि

१ झ. °तिस्तुप्र। २ क. ख. उपकुरुते।





अन्वेष्टव्यात्मविज्ञानात्प्राक्प्रमातृत्वमात्मनः।
अन्विष्टः स्यात्प्रमातैव पाप्मदोषादिवर्जितः॥
देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः।
लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात्" इति॥ ४॥ (४)

इति चतुःसूत्री समाप्ता।

एवं तावद्वेदान्तवाक्यानां ब्रह्मात्मावगतिप्रयोजनानां ब्रह्मात्मनि तात्पर्येण समन्वितानामन्तरेणापि कार्यानुप्रवेशं ब्रह्मणि पर्यवसानमुक्तम्। ब्रह्म च सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिनाशकारणमित्युक्तम्। सांख्यादयस्तु परिनिष्ठितं वस्तु प्रमाणान्तरगम्यमेवेति मन्यमानाः प्रधानादीनि कारणान्तराण्यनुमिमानास्तत्परतयैव वेदान्तवाक्यानि योजयन्ति। सर्वेष्वेव वेदान्तवाक्येषु सृष्टिविषयेष्वनुमानेनैव कार्येण कारणं लिलक्षयिषितम्।

ब्रह्मवाऽस्येत्याशङ्क्याऽऽह। **अन्वेष्टव्येति**। य आत्माऽपहतपाप्मेत्यादिश्रुतिसिद्ध आत्माऽन्वेष्टव्यः सोऽन्वेष्टव्य इति श्रुतेः। तद्विज्ञानात्पूर्वमात्मनो मातृत्वं प्रमातैवान्विष्टः सन्निर्दोषः परमात्मा स्यादतोऽन्वयव्यतिरेकाभ्यामात्मनो मातृत्वमाविद्यकमित्यर्थः। तस्याविद्यत्वे कथमध्यक्षादीनां श्रुतेश्च मानता कारणदोषादित्याशङ्क्याऽऽह। **देहेति**। यथा देहातिरिक्तात्मवादे कल्पिताऽपि देहात्मत्वधीर्व्यवहाराङ्गतया मानमिष्यते तथा तत्त्वसाक्षात्कारपर्यन्तं व्यवहाराङ्गत्वाद्व्यवहारे बाधाभावाच्चाध्यक्षाद्यतत्त्वावेदकमपि व्यावहारिकं मानं श्रुतेस्तु वर्णदैर्घ्यादिवदात्मधीहेतोस्तात्त्विक्येव मानतेत्यर्थः॥ ४॥ (४)

इति चतुःसूत्री समाप्ता।

शास्त्रार्थं चतुर्भिः सूत्रैः संक्षिप्य वक्ष्यमाणाधिकरणानामपुनरुक्तमर्थं वक्तुं वृत्तं संकीर्तयति। **एवमिति**। तेषां तत्फलत्वे हेतुस्तात्पर्येणेति। कार्यान्विते ब्रह्मणि तात्पर्यं तेषामित्याशङ्क्याऽऽह। **अन्तरेणेति**। समन्वयसूत्रार्थमनूद्यातीतसूत्रत्रयार्थमनुवदति। **ब्रह्म चेति**। उक्ते लक्षणे तदतिव्याप्तिशङ्कायां निरासस्य सावकाशत्वाद्ब्रह्मणो जिज्ञास्यस्य लक्षणमपि शास्त्रीयस्योक्तमित्यर्थः। तस्मिन्ब्रह्मणि सिद्धे समन्वये समन्वयाध्यायसमाप्तेरुत्तरसंदर्भानर्थक्यमित्याशङ्क्याऽऽह। **सांख्यादयस्त्विति**। सिद्धेऽर्थे मानत्वविरोधिकार्यानुप्रवेशे प्रत्युक्तेऽपि ब्रह्मण्येव समन्वयो नान्यत्रेत्यनिर्धारणाद्ब्रह्मकारणताविरोधिप्रधानादिवादनिरासायोत्तरसंदर्भ इत्यर्थः। परिनिष्ठितस्य मानान्तरैगम्यत्वे तत्संवादादिना तत्र वेदान्ताप्रामाण्यान्न ततो जगद्धेतुर्ब्रह्म सिध्यतीति चेत्तर्हि

१ ज. लिलक्षयिषन्ति। २ ठ. ड. ढ. °त्वं मा°। ३ ठ. ड. ढ. °वादे नि°। ४ ठ. ड. ढ. °रसाम्यत्वे ए°